आश्विनमासस्य कृष्णपक्षेऽमावास्यायां श्रीदीपोत्सवीनिमित्तं

# ॥ श्रीलक्ष्मीपूजनप्रयोगः ॥

मूल्य १ रूप्यकम्

(आश्विनस्य कृष्णपक्षे अमावास्यायाम्)

## श्रीदीपोत्सवीदेव्याः वैदिकः पौराणिकश्च पूजनप्रयोगः ॥

संयोजकः—शास्त्री अमृतलाल त्रिकमजी आचार्य (जामनगरनिवासी)

श्रीगणेशाय नमः॥ कर्ता[1] सायाह्ने अहते अधरीयोत्तरीये शुद्धे प्रक्षालिते श्वेते वस्त्रोपवस्त्रे वा धृत्वा शुद्धदेशे श्रीपर्ण्यादियज्ञियवृक्षकाष्ठनिर्मिते दारुपीठे कुशकम्बलाद्यन्यतरास्तृते शुभासने प्राङ्मुख उदङ्मुखो वोपविश्य श्रीचित्रलेखिनीसहितानां श्रीमहाकालीमहालक्ष्मी-महासरस्वतीनां पूजनं कुर्यात्॥ तत्रादौ शिखाबन्धनम्। हस्ते जलमादाय। मानस्तोक० इति मन्त्रस्य कुत्स ऋषिः। जगती च्छन्दः। एको रुद्रो देवता शिखाबन्धने विनियोगः॥ ॐ मानंस्तोकेतनंयेमानऽआयुंषिमानोगोषुमानोऽअश्वेंषुरीरिषः ॥ मानोंव्वीरान्रुद्रभामिनोंव्वधीर्हविष्म्मंन्तः सदमित्त्वांहवामहे ॥ $\frac{१५}{१६}$ ॥ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने।

---

१ आदावाचार्यः पूजनकर्तारमन्यांश्च पूजायाः स्थाने समुपवेश्य स्वयं सर्वेषां भाले तिलकं कुर्यात्। ततः प्रत्येकं श्रीसरस्वती-(चोपडानाम्ना प्रसिद्धम्) पुस्तकं दद्यात्। ते च तस्मिन्स्वेष्टदेवतानामभिधानानि परम्परानुसारेण लिख्येयुः। तत आचार्यः सर्वेषु श्रीसरस्वतीपुस्तकेषु कुंकुमेन काश्मीरमिश्रितेन गन्धेन वा [श्रीः 卐] एतादृशं चिह्नं विधाय सर्वाण्यनुक्रमेण आसने स्थापयेत्तदनन्तरं मुख्यमेकं पूजनकर्तारं तत्र समीपे उपवेश्येत आरभ्य पूजनं कारयेत्।

तिष्ठ देवि शिखाबन्धे चामुण्डे चापराजिते ॥ विष्णोर्नामसहस्त्रैस्तु शिखाबन्धं करोम्यहम् ॥ इति मंत्रेण शिखां बध्नीयात् ॥ स्वदक्षिणवामकरयोः कुशपवित्रं धारयेत् ॥ ॐ पवित्रे॑स्त्थो वैष्ण॒व्यौ॑ सवि॒तुर्वः॑ प्रस॒व उत्पु॑नाम्म्य॒च्छिद्रेण प॒वित्रे॑ण॒ सूर्य्य॑स्य र॒श्मिभिः॑ ॥ १/१२ ॥ तस्य॑ते पवित्रपते प॒वित्र॑पूतस्य॒ यत्का॑मः पु॒ने तच्छ॑केयम् ॥ ४/४ ॥ अनामामूलदेशेऽथ वामदक्षिणहस्तयोः। पवित्रं धारयाम्यद्य कौशं वा हेमनिर्मितम् ॥ यथा वज्रं सुरेन्द्रस्य यथा चक्रं हरेस्तथा । त्रिशूलं च त्रिनेत्रस्य तथा मम पवित्रकम् ॥ इति स्वदक्षिणवामकरयोरनामिकामूलदेशे धारयेत् ॥ तत आचार्यो [1]यजमानस्य भाले तिलकं कुर्यात् ॥ ॐ स्व॒स्ति न॒ऽइन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः । स्व॒स्ति न॒स्तार्क्ष्यो॒ऽअरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ २५/१९ ॥ स्वस्तिस्तु या विनाशाख्या धर्मकल्याणवृद्धिदा । विनायकप्रिया नित्यं ताञ्च स्वस्तिं ब्रुवन्तु नः ॥ आचमनम् । [2]ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा । ॐ गोविन्दाय नमः इति हस्तं प्रक्षाल्य । प्राणायामं कुर्यात् । हस्ते जलमादाय । प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवी गायत्री च्छन्दः । भूरादिसप्तव्याहृतीनां विश्वामित्र-



---

१ आचार्यः प्रायः यजमानस्य दक्षिणहस्ते कर्मारंभात्प्राक् रक्तसूत्रेण कंकणं बध्नाति । स तु शिष्टाचार एव ।
२ अनुपनीतानाम् आचमने । ह्रीं केशवाय नमः। ह्रीं नारायणाय नमः। ह्रीं माधवाय नमः। ह्रीं गोविन्दाय नमः इति हस्तं प्रक्षालयेत् ।

जमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः। क्रमेण गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि। तत्सवितुरित्यस्य विश्वामित्र ऋषिः। सविता देवता । गायत्री छन्दः । आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः । ब्रह्माग्निवायुसूर्या देवताः। यजुश्छन्दः । सर्वेषां प्राणायामे विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॥ ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियोयोनः प्रचोदयात् । ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ॐ नमो भगवते वासुदेवाय ॥ एवं पूरककुम्भकरेचकक्रमेण त्रिवारं प्राणायामं कुर्यात् ॥ ततः शान्तिसूक्तं[1] पठेत् ॥

अथ शान्तिसूक्तम् ॥ ॐ आनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानांᳯरातिरभिनोनिवर्त्तताम् ॥ देवानांᳯसख्यमुपसेदिमावयन्देवानऽआयुःप्प्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् । अर्य्यमणं-

[1] पुराणोक्तं शान्तिसूक्तम् ॥ याः श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः । श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ १ ॥ किं वर्णयाम तव रूपमचिन्त्यमेतत्किंचातिवीर्यमसुरक्षयकारि भूरि । किं चाहवेषु चरितानि तवाति यानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ २ ॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा । सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ३ ॥

वरुण ꣳ सोमम्मश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजन्त-
न्मातापृथिवी तत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्या-
युवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथा-
वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥५॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा-
विश्ववेदाः ॥ स्वस्तिनस्ताक्ष्र्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥६॥ पृषदश्वाम-
रुतः पृश्निमातरः शुभंय्यावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदे-
वाऽअवसागमन्निह ॥७॥ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गै-
स्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहिदेवहितंय्यदायुः ॥८॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्रा-
जरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदि-
तिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदिति-
र्ज्जातमदितिर्ज्जनित्त्वम् ॥ १० ॥ द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोष-
धयः शान्तिः ॥ वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्व ꣳ शान्तिः शान्तिरेवशा-
न्तिः सामाशान्तिरेधि ॥११॥ यतोयतः समीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरुप्प्रजाभ्योभ-

यन्नः पशुभ्यः ॥१२॥ सुशान्तिर्भवतु ॥ ततो देवान् प्रणमेत् । श्रीमन्महागणाधिपतये नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । वाणीहिरण्यगर्भाभ्यां नमः । श्रीलक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा

नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशान-जनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थ-सिद्धये ॥ सङ्कल्पः ॥ विष्णुर्विष्णुर्विष्णुः । श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त-मानस्य अद्य ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे (सप्तमे) वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भरतखण्डे ( रामक्षेत्रे परशुरामाश्रमे दण्डकारण्ये श्रीगोदावर्याः असुकदिग्भागे श्रीमल्लवणाब्धेः असुके तटे ) आर्यावर्तान्तर्गतब्रह्मावर्तस्य असुकैकदेशे असुके श्रीशालिवाहनशके असुकनामसंवत्सरे तथा च असुके श्रीविक्रमवर्षे असुकनामसंवत्सरे असुकायने असुकर्तौ असुकमासे असुकपक्षे असुकतिथौ असुकवासरे असुकनक्षत्रे असुकयोगे असुककरणे असुकराशिस्थिते चन्द्रे असुकराशिस्थिते श्रीसूर्ये असुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशि-ष्टायां शुभपुण्यतिथौ मम असुकगोत्रोत्पन्नस्य असुकशर्मणः ( वर्मणः गुप्तस्य दासस्य वा ) सपरिवारस्य आत्मनः श्रुतिस्मृतिपुराणोक्तपुण्य ( पुराणोक्त ) फलावाप्त्यर्थं ( मम ऐश्वर्या-भिवृद्ध्यर्थम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं सकलमन ईप्सितकामना-संसिद्ध्यर्थं लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थं तथा च मम

सभार्यस्य सपुत्रस्य अखिलकुटुंबसहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं तथा च मम जन्मराशेरखिलकुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमस्थानस्थिताः क्रूरग्रहाः तैः सूचितं सूचयिष्यमाणञ्च यत्सर्वारिष्टं तद्विनाशद्वारा सर्वदा तृतीयैकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम् आदित्यादिनवग्रहानुकूलतासिद्ध्यर्थम् इन्द्रादिदशदिक्पालप्रसन्नतासिद्ध्यर्थम् आधिदैविकाऽधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्षफलावाप्त्यर्थम् अस्माभिरारब्धेऽस्मिन् अमुकव्यापारे त्रिगुणात्मिकाश्रीमहालक्ष्मीप्रीतिसम्पादनार्थम् अस्यामाश्विनकृष्णपक्षस्यामावास्यायां गोधूलिके शुभे मुहूर्ते ( अमुके लग्ने ) यथाज्ञानेन यथामीलितोपचारद्रव्यैः ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च श्रीदीपोत्सवीनिमित्तं चित्रलेखिनीसहितानां श्रीमहाकालीमहालक्ष्मीमहासरस्वतीनां पूजनं करिष्ये॥पुनर्जलं गृहीत्वा॥तदङ्गत्वेन निर्विघ्नतासिद्धये गणपतिपूजनं स्वस्तिपुण्याहवाचनञ्च करिष्ये ॥ पुनर्जलं गृहीत्वा । तत्रादौ दिग्रक्षणं कलशार्चनं शङ्खघण्टाद्यर्चनञ्च करिष्ये ॥ दिग्रक्षणम् ॥ वामहस्ते सर्षपानादाय दक्षिणहस्तेनाच्छाद्य रक्षोघ्नमंत्रान्पठेत् ॥ ॐ रक्षोहणंवलगहनंवैष्णवी मिदमहन्तंवलगमुत्किरामियम्मे निष्ठ्योयममात्यो निचखानेदमहन्तंवलगमुत्किरामि यम्मेसमानोयमसमानो निचखानेदम-

हन्तं वलगमुत्किरामियम्मेसबन्धुरुर्यमसबन्धुर्न्निचखानेदमहन्तम्वलगमुत्किरामियम्मेसजातो यमसंजातोनिचखानोत्कृत्त्यांकिरामि ॥ २३ ॥ रक्षोहणोवोवलगहन६प्रोक्षामिवैष्णवान्त्र-क्षोहणोंवोवलगहनोवनयामिवैष्णवान्त्रक्षोहणोंवोवलगहनोवस्तृणामिवैष्णवान्त्रक्षोहणौ-वांवलगहनाऽउपदधामिवैष्णवीरक्षोहणौ वांवलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसि-वैष्णवास्त्थ ॥ २५ ॥ रक्षसांभागोसिनिरस्त६रक्षऽइदमह६रक्षोमितिष्ठामीदमह६रक्षो-वबाधऽइदमह६रक्षोधमन्तमोनयामि ॥ घृतेनद्यावापृथिवीप्प्रोर्ण्णुवाथांवायोवेस्तोकानाम-ग्निराज्यस्यवेतुस्वाहास्वाहाकृतेऽऊर्द्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६ ॥ रक्षोहाविश्वचर्षणिर-भियोनिमयोहते । द्रोणेसधस्त्थमासदत ॥ २६ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषा-मवरोधेन पूजाकर्म समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु यत्सर्वं यत्रस्थं तत्र गच्छतु । भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम् ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु देवपूजां करोम्यहम् ॥ एतैर्मन्त्रैः सर्षपान्दिक्षु विदिक्षु च विकीर्य वामपादेन भूमिं त्रिवारं ताडयेत् । ततः शरीरशुद्ध्यर्थं स्वदक्षिणहस्ते जलं गृहीत्वा स्वदक्षिणवामनेत्रयोरुदकस्पर्शं कुर्यात् ॥

अथ कलशार्चनम् ॥ स्ववामभागे अक्षतपुञ्जोपरि जलपूरितं कलशं संस्थाप्य तत्र वरुणावाहनम्॥ तत्त्वायामीत्यस्य शुनःशेप ऋषिः। त्रिष्टुप् छन्दः। वरुणो देवता। वरुणावाहने विनियोगः॥ ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोद्ध्युरुशᳪस मा न ऽआयुः प्रमोषीः॥ ४९/१८॥ गंगे च यमुने चैव गोदावरि सरस्वति। कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु॥ ॐ भूर्भुवः[1] स्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि स्थापयामि॥ प्रतिष्ठापनम्॥ ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳪसमिमं दधातु॥ विश्वे देवास ऽइह मादयन्तामो ३म्प्रतिष्ठ॥ १३/२॥ भगवन्वरुणागच्छ त्वमस्मिन् कलशे प्रभो!। कुर्वेऽत्रैव प्रतिष्ठां ते जलानां शुद्धिहेतवे॥ ॐ वरुणाय नमः वरुण सुप्रतिष्ठितो वरदो भव॥ कलशस्य चतुर्दिक्षु गन्धेन चतुर्वेदान्पूजयेत्। पूर्वे ऋग्वेदाय नमः॥ दक्षिणे यजुर्वेदाय नमः॥ पश्चिमे सामवेदाय नमः॥ उत्तरे अथर्वणवेदाय नमः॥ कलशमध्ये अपाम्पतये वरुणाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि॥ अनामिकया कलशं स्पृशेत्—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समा-

---

१ "ॐ भूर्भुवः स्वः" स्थानेऽनुपनीतानां वैश्यादीनां "ह्रीं" इति पदं देयम्। यत्र यत्र ॐ कारस्तत्र सर्वत्रैवं बोध्यम्।

श्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ कलशं प्रार्थयेत् ॥ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ अङ्कुशमुद्रया सूर्यमण्डलात्सर्वाणि तीर्थान्यावाह्य । वं इति धेनुमुद्रया अमृतीकृत्य । हूँ इति कवचेनावगुण्ठ्य मत्स्यमुद्रयाऽऽच्छाद्य । वं वरुणाय नमः इत्यनेनाष्टवारमभिमन्त्र्य तस्मादुदकादुदकं गृहीत्वा स्वात्मानं सम्प्रोक्षेत्—ॐ आपो हिष्ठा मयो० ॥ पुनर्जलं गृहीत्वा । पूजाद्रव्याणि भूमिश्च प्रोक्षयेत् । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरं शुचिः ॥

शङ्खपूजनम् ॥ ॐअग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ॥ तमीमहेमहागयम् ॥ २६ ॥ शङ्खादौ चन्द्रदैवत्यं कुक्षौ वरुणदेवता । पृष्ठे प्रजापतिश्चैव ह्यग्रे गंगा सरस्वती ॥१॥ त्र्यैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया । शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् ॥ २ ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । निर्मितः सर्वदेवैश्च पाञ्चजन्य ! नमोऽस्तु ते ॥२॥ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥ ॐ भूर्भुवः स्वः शङ्खस्थदेवतायै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ शङ्खमुद्रां प्रदर्शयेत् ॥ घण्टा-पूजनम् ॥ ॐ सुपर्णोऽसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ । स्तोमऽआ-त्माच्छन्दा७स्यङ्गानियजू७षिनाम । सामंतेतनूर्वामदेव्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ॥ सुपर्णोसि गरुत्मान्दिवंङ्गच्छस्वः पत ॥ १२/४ ॥ आगमार्थं तु देवानां गमनार्थं तु रक्ष-साम्॥ घण्टानादं प्रकुर्वीत पश्चाद् घण्टां प्रपूजयेत् ॥ ॐभूर्भुवः स्वः घण्टास्थिताय गरुडाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ घण्टामुद्रां प्रदर्शयेत् ॥ दीपपूजनम्—घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय—ॐअग्निर्ज्योतिषाज्योतिष्मान्रुक्मोवर्चसावर्चस्वान् ॥ सहस्रदाऽअसिसहस्रायत्वा ॥ ४०/१३ ॥ भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् । यावत्कर्म-समाप्तिः स्यात्तावदत्र स्थिरो भव ॥ ॐ भूर्भुवः स्वः दीपस्थदेवतायै नमः आवाहयामि सर्वोप-

चारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥ गणपतिपूजनम् ॥ ताम्रपत्रे सिद्धिबुद्धिसहितं गणपतिं संस्थाप्य ध्यानपूर्वकमावाहनं कुर्यात् । उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानं प्रेङ्खं नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामम् । देवं शम्भोरपत्यं भुजगपतितनुस्पर्धिवार्धिष्णुहस्तं ध्याये पूजार्थमीशं गणपतिममलं धीश्वरं कुञ्जरास्यम् ॥ आवाहनम् ॥ ॐगणानान्त्वा०॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः गणपतिं आवाहयामि ॥ प्रतिष्ठापनम् ॥ ॐमनोजूतिर्जुषता० । ॐसिद्धिबुद्धिसहितः महागणपतिः सुप्रतिष्ठितो वरदो भवतु ॥ आसनम् ॥ ॐवर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि योमाकश्चाभिदासति ॥ ॐ पुरुषऽएवेदꣳसर्वंय्यद्भूतँय्यच्चभाव्यम् । उतामृतत्त्वस्येशानोयदन्नेना तिरोहति॥ ३१/२ ॥रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् । आसनं च मया दत्तं गृहाण परमेश्वर॥ ॐभूर्भुवः स्वः सि० महागणप० आसनं समर्पयामि ॥ पाद्यम् ॥ ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यव्विश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३१/११ ॥ उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् । पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः पाद्यं समर्पयामि ॥ अर्घ्यम् ॥ ॐधामन्तेव्विश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥ १९/१७ ॥

रौप्यपात्रे स्थितं तोयं गन्धपुष्पफलान्वितम् । सहिरण्यं ददाम्यर्घं गृहाण परमेश्वर ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धि० महागण० अर्घं समर्पयामि॥ आचमनीयम् ॥ ॐइमम्मेवरुणश्श्रुधी-हवमद्याचमृडय ॥ त्वामवस्युराचके ॥ $\frac{१}{१२}$ ॥ सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् । आचामार्थं मया दत्तं गृहाण गणनायक ॥ ॐभूर्भुवःस्वः सि० महागण० आचमनीयं सम० ॥ पयःस्नानम् ॥ ॐपयःसोरूपंस्स्यवांदुग्धोरूपङ्कर्कन्धूनि॥ सोमस्यरूपंवाजिनᳬसौम्म्यस्यरूपमामिक्षा ॥ $\frac{२३}{१९}$ ॥ कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् । पावनं यज्ञहेतु च पयः स्नानार्थमर्पितम् ॥ ॐभूर्भुवः स्वः सि० महाग० पयःस्नानं सम० । पयःस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ दधिस्नानम्॥ ॐदधिक्क्राव्व्णोऽअकारिषञ्जिष्णोरश्श्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूᳬषितारिषत् ॥ $\frac{३२}{२३}$ ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥ ॐभू० सिद्धि० महाग० दधिस्नानं सम० । दधिस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० । घृतस्नानम् ॥ घृतेनाञ्जन्त्सम्पथोदेवयानान्प्रजानन्वाज्यप्प्येतुदेवान् ॥ अनुत्त्वासप्प्रदिशः सचन्ताᳬस्वधामस्म्मैयजमानायधेहि ॥ $\frac{२}{२९}$ ॥ नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सिद्धि० महागण० घृतस्नानं सम० । घृतस्नानान्ते

शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ मधुस्नानम् ॥ स्वाहा-मरुद्भिः परिश्रीयस्वदिवः सᳬंस्पृशस्प्पाहि ॥ मधुमधुमधु ॥ १३/३७ ॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहित-महागणपतये नमः मधुस्नानं समर्पयामि । मधुस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदक-स्नानान्ते आचमनीयं सम० ॥ शर्करास्नानम् ॥ ॐअपाᳬंरसमुद्वयसᳬंसूर्य्येसन्तᳬंसमाहितम् ॥ अपाᳬंरसंस्ययोरसस्तम्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्म्येषतेयोनिरि-न्द्रायत्त्वाजुष्टतमम् ॥ ३/९ ॥ इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ ॐभूर्भुवः स्वः सिद्धि० महाग० शर्करास्नानं सम० । शर्करास्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ गन्धोदकस्नानम् ॥ ॐगन्धर्व्व-स्त्त्वाविश्वावसुः परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ३/२ ॥ मलयाचलसम्भूतं चन्दनागरुसंयुतम् । चन्दनं च मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐभूर्भुवः स्वः सिद्धि० महाग० गन्धोदकस्नानं सम० । गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ उद्वर्तनस्नानम् ॥ ॐअᳬंशुनातेऽअᳬंशुः पृच्यतामपरुषा-परुः ॥ गन्धस्तेसोममवतुमदायरसोऽअच्युतः ॥ ३७/२० ॥ नानासुगन्धिद्रव्यं च चन्दनं

रजनीयुतम् । उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐभूर्भुवः स्वः सिद्धि० महाग० उद्वर्तनं-स्नानं सम० । उद्वर्तनस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० । ततो निर्माल्यमुत्तरे विसृज्य पुनः गन्धाक्षतपुष्पैरभ्यर्च्य गन्धमिश्रितैर्जलैरभिषेकं कुर्यात् ॥ ॐनमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्त्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्द्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापो नलोऽनिलो नभः । त्वं चत्वारि-वाक्पदानि । त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वमवस्थात्रया-तीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः

स्वरोम् गणादीन्पूर्वमुच्चार्य वर्णादीँस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम् । संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्रीछन्दः । गणपतिर्देवता । ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदश्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥ पुराणोक्तं गणपतिस्तोत्रम् । प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुण्डश्च एकदन्तं द्वितीयकम् ॥ तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ॥ सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥ ३ ॥ नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसन्ध्यं यः

पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ॥ संवत्सरेण सिद्धिञ्च लभते नात्र संशयः ॥ ७ ॥ अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः । इति नारद-पुराणे सङ्कटनाशनं गणपतिस्तोत्रम् ॥ ॐ अमृताभिषेकोऽस्तु । ॐ भूर्भुवः स्वः सिद्धि० महाग० अभिषेकस्नानं सम० ॥ शुद्धोदकस्नानम् ॥ ॐ शुद्धवालः सर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्ण्णायामाऽअवलिप्तारौद्रानभोरूपाः पार्ज्जन्याः ॥ $\frac{3}{24}$ ॥ स्नानार्थं तव देवस्य पवित्रं तोयमुत्तमम् ॥ तीर्थेभ्यश्च समानीतं गृहाण गण-नायक ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ ततो गणपतिं वस्त्रेण प्रोञ्छयित्वा पीठे निदध्यात् ॥ वस्त्रम् ॥ ॐसुजातोज्ज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्व-विभावसो ॥ $\frac{40}{11}$ ॥ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ ॐभू० सिद्धि० महाग० वस्त्रं सम० ॥ वस्त्रान्ते आचमनीयं सम० ॥ उपवीतम् । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं

बलमस्तु तेजः॥ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० यज्ञोपवीतं समर्पयामि ॥ यज्ञोपवीतान्ते आचमनं सम० ॥ गन्धम् ॥ ॐत्वाङ्गन्धर्वाऽअंखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामौषधेसोमोराजांविद्वान्यक्ष्मांदमुच्यत ॥ ९८/२१ ॥ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर ॥ ॐ भू० सिद्धि० महागण० गन्धं समर्पयामि ॥ अक्षताः ॥ ॐअक्षन्नमीदन्तह्यवं प्रियाऽअंधूषत ॥ अस्तोषतस्वभानवोविप्रानविंष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१/३ ॥ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः । मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ ॐ भूर्भुवः स्वः सिद्धि० महाग० अक्षतान्समर्पयामि ॥ पुष्पाणि ॥ ओषधीःप्रतिमोदद्ध्वम्पुष्पवतीःप्रसूवरीः ॥ अश्श्वांऽइवसजित्त्वरीर्वीरुधंःपारयिष्ण्वः ॥ ११/१२ ॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयानीतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥ ॐभूर्भुवःस्वः सिद्धि० महागण० पुष्पाणि समर्पयामि ॥ दूर्वाङ्कुरान् ॥ काण्डांकाण्डात्प्ररोहन्तीपरुषःपरुषस्प्परिं ॥एवानोंदूर्वेप्रतंनुसहस्रेणशतेनंच ॥ २०/१३ ॥ दूर्वे ह्यमृतसम्पन्ने शतमूले शताङ्कुरे । शतं पातकसंहन्त्री शतमायुष्यवर्धिनी ॥ विष्ण्वादिसर्वदेवानां दूर्वे त्वं प्रीतिदा सदा । क्षीरसागरसम्भूते वंशवृद्धिकरी भव ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० दूर्वाङ्कुरान्सम० ॥ अथाङ्गपूजां कुर्यात् । ॐ गणेश्वराय नमः

पादौ पूजयामि । ॐविघ्नराजाय० जानुनी पूजयामि । ॐआखुवाहनाय० ऊरू पूजयामि । ॐहेरम्बाय० कटिं पूजयामि । ॐकामारिसुनवे० नाभिं पूजयामि । ॐलम्बोदराय० उदरं पूजयामि । ॐगौरीसुताय० स्तनौ पूजयामि । ॐगणनायकाय० हृदयं पूजयामि । ॐस्थूलकण्ठाय० कण्ठं पूजयामि । ॐस्कन्दाग्रजाय० स्कन्धौ पूजयामि । ॐपाशहस्ताय० हस्तौ पूजयामि । ॐगजवक्राय० वक्त्रं पूजयामि । ॐविघ्नहर्त्रे० ललाटं पूजयामि । ॐसर्वेश्वराय० शिरः पूजयामि । ॐगणाधिपाय० सर्वाङ्गं पूजयामि । अथावरणपूजां कुर्यात् । अक्षतैः पूजयेत् । ॐसुमुखाय नमः । ॐएकदन्ताय नमः । ॐकपिलाय नमः । ॐगजकर्णाय नमः । ॐलम्बोदराय नमः । ॐविकटाय नमः । ॐविघ्ननाशनाय नमः । ॐविनायकाय नमः । ॐधूम्रकेतवे नमः । ॐगणाध्यक्षाय नमः । ॐभालचन्द्राय नमः । ॐगजाननाय नमः । दक्षिणहस्ते गन्धाक्षतपुष्पाण्यादाय । अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं समस्तावरणार्चनम् ॥ सुमुखादिसमस्तावरणदेवताभ्यो नमः गन्धाक्षतपुष्पाणि सम० । अनेन गणपत्यावरणदेवानां पूजनेन सिद्धि० महागणपतिः प्रीयताम् । सौभाग्यद्रव्याणि॥ॐअहिंरिवभोगैः पर्य्येति बाहुञ्ज्यायाहेतिम्पंरिबाधमानः॥हस्तघ्नोविश्श्वांवयुनांनिविद्वान्पुमान्पुमांꣳसम्परिंपातुविश्श्वतः ॥ ५१/२९ ॥ हरिद्रां कुङ्कुमश्चैव सिन्दूरं कज्जला-

न्वितम् । सौभाग्यद्रव्यमेतत्त्वं गृहाण परमेश्वर ॥ ॐभू० सिद्धि० महागण० सौभाग्यद्रव्याणि समर्पयामि ॥ धूपम् ॥ ॐअश्श्वस्यत्त्वावृष्ण्णं÷शुक्काधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्त्वा-मखस्यत्त्वाशीष्ण्र्णे ॥ अश्श्वस्यत्त्वावृष्ण्णं÷शुक्काधूपयामि देवयजनेपृथिव्याः ॥ मखायत्त्वा-मखस्यत्त्वाशीष्ण्र्णे ॥ अश्श्वस्यत्त्वावृष्ण्णं÷शुक्काधूपयामि देवयजनेपृथिव्याः ॥ मखायत्त्वा-मखस्यत्त्वाशीष्ण्र्णे॥मखायत्त्वामखस्यत्त्वाशीष्ण्र्णे॥मखायत्त्वामखस्यत्त्वाशीष्ण्र्णे॥मखायत्त्वा-मखस्यत्त्वाशीष्ण्र्णे ॥ ३७ ॥ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः सिद्धि० महागणपतये नमः धूपमाघ्रापयामि । दीपम् ॥ ॐ चन्द्रमाऽअप्प्स्वन्तरासुपण्र्णोधावतेदिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳहरिरेतिकनि-क्रदत् ॥ ३३ ॥ आज्यश्च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्य-तिमिरापह ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐअन्नपतेन्नस्य-नोदेह्यनमीवस्यशुष्मिणं÷ ॥ प्रप्प्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्प्पदे ॥ ८३/११ ॥ शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारं भक्ष्यभोज्यश्च नैवेद्यं प्रतिगृह्यताम् ॥ गायत्रीं पठित्वा जलेन नैवद्यं सम्प्रोक्ष्य धेनुमुद्रयामृतीकृत्य ग्रासमुद्राः प्रदर्शयेत् ॥ ॐप्राणाय स्वाहा । ॐअपानाय स्वाहा । ॐव्यानाय स्वाहा । ॐउदानाय स्वाहा । ॐसमानाय स्वाहा । ॐ-

भूर्भुवः स्वः सिद्धि० महाग० नैवद्यं निवेदयामि । पूर्वापोशनं सम० ॥ नैवेद्यमध्ये पानीयम् ॥ एलोशीरलवङ्गादिकर्पूरपरिवासितम् । दत्तं ते प्राशनार्थाय गृहाण सलिलं प्रभो ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० मध्ये पानीयं सम० । उत्तरापोशनं सम० । हस्तप्रक्षालनं सम० । मुखप्रक्षालनं सम० । आचमनीयं सम० । करोद्वर्तनार्थे गन्धं समर्पयामि ॥ मुखवासार्थे ताम्बूलम् ॥ ॐ उतस्म्मास्यद्द्रवंतस्तुरण्ण्यतः पुर्ण्णन्नवेरनुवातिप्प्रगर्द्धिनः ॥ श्येनस्येवद्ध्रजंतोअङ्कसम्परिंदधिक्क्राव्वर्णः सहोर्जातारित्रतः स्वाहा ॥ ९५ ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ॐ भू० सिद्धि० महागण० ताम्बूलं सम० ॥ फलम् ॥ ॐ याः फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्चपुष्प्पिणीः ॥ बृहस्प्पतिप्प्रसूतास्त्तानोमुञ्चन्त्वᳬहंसः ॥ ८९/९२ ॥ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेजन्मनि जन्मनि ॥ ॐ भू० सिद्धि० महागण० फलं सम० ॥ दक्षिणाम् ॥ ॐ यद्दत्तँय्यत्त्परादानँय्यत्त्पूर्त्तँय्याश्चदक्षिणाः ॥ तदग्ग्निर्वैश्श्वकर्म्मणः स्वर्द्देवेषुनोदधत् ॥ ६४/५८ ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० सुवर्णपुष्पदक्षिणां सम० ॥ कर्पूरारार्तिक्यम् ॥ ॐ आरात्रिपार्थिवᳬरजः पितुरप्प्रायिधामभिः ॥ दिवः सदांᳬसिबृहतीवितिष्ठसऽआत्त्वेषंवर्त्ततेतमः ॥ ३२/३४ ॥ कर्पूरपूरेण मनोहरेण सुवर्णपात्रान्तरसंस्थितेन ।

प्रदीप्तभासा सहसङ्गतेन नीराजनं ते जगदीश कुर्वे ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० कर्पूरारार्तिक्यं समर्पयामि ॥ आचाराद्देववन्दनम् । हस्तेन ( शरीरे आरोग्यताप्राप्त्यर्थम् ) आत्मवन्दनम् । हस्तं प्रक्षाल्य अञ्जलौ पुष्पाण्यादाय मंत्रपुष्पाञ्जलिर्दद्यात् ॥ मन्त्रपुष्पाञ्जलिः ॥ ॐनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविरूपेभ्यश्चवोनमः ॥ ३५/१६ ॥ हस्तीन्द्राननमिन्द्रचूडमरुणच्छायं त्रिनेत्रं रसादाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ॥ वीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलव्रीह्यग्रविषाणरत्नकलशान्हस्तैर्वहन्तं भजे ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागण० मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ प्रदक्षिणाः ॥ ॐसप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्वानाऽअवध्नन्पुरुषम्पशुम् ॥ १५/३१ ॥ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिणपदे पदे ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० प्रदक्षिणां सम० ॥ ततो विशेषार्घं दद्यात् । ताम्रपात्रे जलं गृहीत्वा चन्दनाक्षतपुष्पाणि द्रव्यञ्च तस्मिन् निक्षिप्य तदुपरि नालिकेरञ्च निधाय तत्पात्रं दक्षिणहस्ते धारयेत् ॥ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयङ्कर्ता त्राता भवभवार्णवात् ॥ द्वैमातुरकृपासिन्धो षाण्मातुरग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छि-

तार्थद ॥ अनेन सफलार्घेण फलदोऽस्तु सदा मम ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० विशेषार्घं सम० ॥ प्रार्थयेत् ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय । विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः । विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥ ॐ भूर्भुवः स्वः सिद्धि० महागण० प्रार्थनापूर्वकं नमस्कारान् सम० । हस्ते जलं गृहीत्वा । अनया पूजया सिद्धिबुद्धिसहितः साङ्गः सपरिवारः महागणपतिः प्रीयतां न मम ॥ इति गणपतिपूजाप्रयोगः ॥

## ॥ अथ पुण्याहवाचनप्रयोगः ॥

स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैः श्वेतैस्तन्दुलैर्यवैर्वाष्टदलं कार्यम् ॥ तत्र भूमिं स्पृशेत् ॥ ॐ म॒ही द्यौः पृ॑थि॒वी च॑ न॒ऽइ॒मं य॒ज्ञं मि॑मिक्षताम् ॥ पि॒पृ॒तान्नो॒ भरी॑मभिः ॥ ३२/८ ॥ विश्वा-

धारासि धरणी शेषनागोपरिस्थिता ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ तत्र यवप्रक्षेपः ॥ ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्त ᳪ राजन्पारयामसि ॥ ९६/९२ ॥ तत्राष्टदलोपरि पुण्याहवाचनार्थम् एकं ताम्रकलशं संस्थापयेत् । तत्र मंत्रः ॥ ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्रयिः ॥ ८/४२ ॥ हेमरूप्यादिसम्भूतं ताम्रजं सुदृढं नवम् । कलशं धौतकल्माषं छिद्रवर्णविवर्जितम् ॥ तत्र कलशे जलपूरणम् ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ ३६/४ ॥ जीवनं सर्वजीवानां पावनं पावनात्मकम् । बीजं सर्वौषधीनां च तज्जलं पूरयाम्यहम् ॥ गन्धप्रक्षेपः ॥ ॐ त्वां गन्धर्वा ऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९६/९२ ॥ केशरागरुकङ्कोलघनसारसमन्वितम् । मृगनाभियुतं गन्धं कलशे प्रक्षिपाम्यहम् ॥ धान्यप्रक्षेपः ॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ॥ २०/१ ॥ धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम् ॥ निर्मिता ब्रह्मणा पूर्वं कलशे प्रक्षिपाम्यहम् ॥ सर्वौषधीप्रक्षेपः ॥ ॐ या ऽओषधीः पूर्वा जाता-

देवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणांमहछशतन्धामानिसप्तचं ॥ ७५/२१ ॥ ओषध्यः सर्ववृक्षाणां तृणगुल्मलतास्तु याः । दूर्वासर्षपसंयुक्ताः कलशे निक्षिपाम्यहम् ॥ दूर्वाप्रक्षेपः ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्प्परि ॥ एवानोदूर्वेप्प्रतनुसहस्रेणशतेनच ॥ २०/१३ ॥ दूर्वे ह्यमृतसम्पन्ने शतमूले शताङ्कुरे । शतं पातकसंहन्त्री कलशे प्रक्षिपाम्यहम् ॥ पञ्चपल्लवप्रक्षेपः ॥ ॐअश्वत्थेवोनिषदनम्पर्णेवोव्वसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ७९/२१ ॥ अश्वत्थोदुम्बरः प्लक्षो नूतन्यग्रोधपल्लवाः । पञ्चैतान् पल्लवानस्मिन्कलशे प्रक्षिपाम्यहम् ॥ सप्तमृद्प्रक्षेपः ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्प्रथाः ॥ १३/३६ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद् ह्रदात् । राजस्थानाच्च गोष्ठाच्च मृदमानीय निःक्षिपेत् ॥ फलप्रक्षेपः ॥ ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वछहसः ॥ ८९/१२ ॥ पुगीफलमिदं दिव्यं पवित्रं पुण्यदं नृणाम् । हारकं पापपुञ्जानां कलशे प्रक्षिपाम्यहम् ॥ पञ्चरत्नप्रक्षेपः ॥ ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ २५/११ ॥ कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ॥ हिरण्यप्रक्षेपः ॥ ॐहिरण्यगर्भःसमवर्त्तताग्ग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्म्मैदेवायहविषाविधेम ॥ ४/१३ ॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदं कलशे प्रक्षिपाम्यहम् ॥ ततः रक्तसूत्रेण वस्त्रेण वा कलशं वेष्टयेत् ॥ ॐसुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥ ॥ ॐयुवासुवासाः परीवीत आगात्स उश्रेयान्भवति जायमानः ॥ तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ पा० गृ० का० २ कं० २ मं० ९ ॥ सूत्रं कार्पाससम्भूतं ब्रह्मणा निर्मितं पुरा । येन बद्धं जगत्सर्वं तेनेमं वेष्टयाम्यहम् ॥ कलशस्योपरि पूर्णपात्रं न्यसेत् ॥ ॐपूर्ण्णादर्व्विपरापतसुपूर्ण्णापुनरापत ॥ वस्नेवविक्क्रीणावहाऽइषमूर्जꣳशतक्क्रतो ॥ ॥ पिधानं सर्ववस्तूनां सर्वकार्यार्थसाधनम् । सम्पूर्णः कलशो येन पात्रं तत्कलशोपरि ॥ यजमानो हस्तेऽक्षतानादाय तत्र वरुणमावाहयेत् ॥ ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ॥ ॐभूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम् ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टंय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ ॥ प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता । कलशे वरुणस्यास्मिन्प्रतिष्ठां तां करोम्यहम् ॥ ॐवरुणाय नमः वरुणः सुप्रतिष्ठितो वरदो भव ॥ ॐ भूर्भुवः स्वः वरुणाय नमः चन्दनं समर्पयामि ॥

एवं कलशे पञ्चोपचारैर्वरुणं सम्पूज्य स्वदक्षिणकरस्यानामिकया कलशं स्पृष्ट्वा अभिमन्त्रयेत् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ इत्यभिमन्त्र्य । ततः प्रार्थयेत् ॥ देवादनवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय । सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक । पुण्याहवाचनं यावत्तावत्त्वं सन्निधो भव ॥ इति सम्प्रार्थ्य । यजमानो भूमिकृतोभयजानुमण्डल उपविशेत् ॥ अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा वदेत् ॥ ॐ त्रीणिंप॒दाविच॑क्क्रमे॒ विष्ण्णु॑र्गोपाऽअदा॑भ्यः ॥ अ॒तोधर्म्मा॑णिधा॒रय॑न् ॥ $\frac{४३}{३४}$ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥

तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ विप्रा वदेयुः ॥ तेनायुः-प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ पुनः—ॐत्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सु-त्रीण्यन्तः समुद्रे ॥ उतेवमेवरुणश्छन्त्स्यर्वन्यत्रातऽआहुःपरमञ्जनित्रम् ॥ $\frac{१५}{२९}$ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु॥ पुनः—ॐत्र्यादेवाऽएकादशत्रयस्त्रिᳪ-शाःसुराधसः ॥ बृहस्पतिपुरोहितादेवस्यसवितुःसवे ॥ देवादेवैरवन्तुमा ॥ $\frac{११}{२०}$ ॥ तेनायुः-प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ ततश्चतुरो ऋग्यजुःसामाथर्वविदो ब्राह्मणानुपवेश्य तेषां हस्ते सुप्रोक्षितादिक-रणम्। ॐ शिवा आपः सन्तु । ॐ सन्तु शिवा आपः । ॐ सौमनस्यमस्तु । ॐ अस्तु सौमनस्यम्। ॐ अक्षतञ्चारिष्टञ्चास्तु। ॐअस्त्वक्षतमरिष्टञ्च । ॐ गन्धाः पान्तु सौमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्तु । गन्धाः पान्तु सौमङ्गल्यञ्चास्तु । अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्तु । ॐ अक्षताः पान्तु आयुष्यमस्तु । ॐ पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्तु । पुष्पाणि पान्तु सौश्रियमस्तु । ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्तु । ताम्बुलानि पान्तु ऐश्वर्यमस्तु । पूगीफलानि पान्तु बहुफलमस्त्विति भवन्तो ब्रुवन्तु । पूगीफलानि पान्तु बहुफलमस्तु। दक्षिणाः पान्तु बहु देयञ्चास्त्विति भवन्तो ब्रुवन्तु। दक्षिणाः पान्तु बहुदेयञ्चास्तु ।

( यजमानो वदेत् ) ॐ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्त्विति भवन्तो ब्रुवन्तु । ( ब्राह्मणा वदेयुः ) अस्तु ते दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यम् । ( यजमानो वदेत् ) यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहम् ओंकारमादिं[1] कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । द्विजाः वाच्यताम् इति ब्रूयुः । ततो यजमानो ब्राह्मणानां हस्तेऽक्षतान्दद्यात्ते च मन्त्रान्ते आशिषो दद्युः ॥ ॐभद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्श्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितँयदायुः ॥ २१/२५ ॥ ॐदेवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳬरातिरभिनोनिवर्त्तताम् । देवानाᳬसख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ १५/२५ ॥ ॐ दीर्घायुस्त्तऽओषधेखनितायस्म्मैचत्वाखनाम्म्यहम् । ॐअथोत्त्वन्दीर्घायुर्भूत्त्वाशतवल्शाविरोहतात् ॥ १२/१०० ॥ आचार्यः पुराणोक्तमन्त्रेणाप्याशीर्वादं दद्यात् । स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिरस्तु धनधान्यसमृद्धिरस्तु । ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे

१ ब्राह्मणेतराणामत्र "ह्रींकारमादिम्" इति वाच्यम् ।

सदैव भवतां हरिभक्तिरस्तु ॥ इत्याशीर्वादः ॥ ततो यजमानो ब्राह्मणान् वदेत् ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ॥ समाहितमनसः स्मः इति ब्राह्मणा वदेयुः ॥ (एवं सर्वत्र) प्रसीदन्तु भवन्तः ॥ प्रसन्नाः स्मः ॥ ॐ शान्तिरस्तु ॥ (अस्तु शान्तिः) ॐ पुष्टिरस्तु ॥ ॐ तुष्टिरस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु ॥ ॐ आयुष्यमस्तु ॥ ॐ आरोग्यमस्तु ॥ ॐ शिवं कर्मास्तु ॥ ॐ कर्मसमृद्धिरस्तु ॥ ॐ धर्मसमृद्धिरस्तु ॥ ॐ वेदसमृद्धिरस्तु ॥ ॐ शास्त्रसमृद्धिरस्तु ॥ ॐ धनधान्यसमृद्धिरस्तु ॥ ॐ पुत्रपौत्रसमृद्धिरस्तु ॥ ॐ इष्टसम्पदस्तु ॥ ॐ अरिष्टनिरसनमस्तु ॥ ॐ यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ॐ यच्छ्रेयस्तदस्तु ॥ ॐ उत्तरे कर्मणि निर्विघ्नमस्तु ॥ ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् ॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु ॥ (पात्रे उदकसेकः) तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् ॥ ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐ दुर्गापाञ्चाल्यौ प्रीयेताम् ॥ ॐ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् ॥ ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् ॥ ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ॥ ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ॥ ॐ अरुन्धतीपुरोगा

॥ १५ ॥

एकपत्न्यः प्रीयन्ताम् ॥ ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ॥ ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् ॥ ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ ॐ श्रीसरस्वत्यौ प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥ ॐ भगवती कात्यायनी प्रीयताम् ॥ ॐ भगवती माहेश्वरी प्रीयताम् ॥ ॐ भगवती ऋद्धिकरी प्रीयताम् ॥ ॐ भगवती सिद्धिकरी प्रीयताम् ॥ ॐ भगवती पुष्टिकरी प्रीयताम् ॥ ॐ भगवती तुष्टिकरी प्रीयताम् ॥ ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयन्ताम् ॥ ॐ सर्वा ग्रामदेवताः प्रीयन्ताम् ॥ वहिः पूर्वस्याम् ॥ ॐ हताश्च ब्रह्मद्विषः ॥ ॐ हताश्च परिपन्थिनः ॥ ॐ हताश्च विघ्नकर्तारः ॥ ॐ शत्रवः पराभवं यान्तु ॥ ॐ शाम्यन्तु घोराणि ॥ ॐ शाम्यन्तु पापानि ॥ ॐ शाम्यन्त्वीतयः ॥ पुनः पात्रे ॥ ॐ शुभानि वर्द्धन्ताम् ॥ ॐ शिवा आपः सन्तु ॥ ॐ शिवा ऋतवः सन्तु ॥ ॐ शिवा ओषधयः सन्तु ॥ ॐ शिवा वनस्पतयः सन्तु ॥ ॐ शिवा नद्यः सन्तु ॥ ॐ शिवा गिरयः सन्तु ॥ ॐ शिवा अतिथयः सन्तु ॥ ॐ शिवा अग्नयः सन्तु ॥ ॐ शिवा आहुतयः सन्तु ॥ ॐ अहोरात्रे शिवे स्याताम् ॥ यजुः ॥ ॐनिकामेंनिकामेनः पर्ज्जन्योंवर्षतुफलंवत्त्योनऽओषंधयःपच्चयन्ताँय्योगक्षेमोनंःकल्पताम् ॥ २२/२२ ॥ ऋंकूसामा-

[1] चतुर्वेदानां ब्राह्मणाश्चेत्तर्हि तैस्तत्र तत्रेत आरभ्य स्वशाखीया मन्त्राः पठनीयाः इति सर्वत्र ज्ञेयम्।

थर्वमन्त्राः ॥ ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ॐ भगवान्नारायणः प्रीयताम् ॥ ॐ भगवान्पर्जन्यः प्रीयताम् ॥ ॐ भगवान् स्वामी महासेनः प्रीयताम् ॥ पुण्याहकालान्वाचयिष्ये ॥ विप्रा ॐ वाच्यताम् इति ब्रूयुः ॥ ब्राह्म्यं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीदीपोत्सवीदेवतापूजनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥ ॐ अस्तु पुण्याहम् ॥ एवं त्रिः ॥ यजुः ॥ ॐ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ३९/१९ ॥ ऋक्सामाथर्वमन्त्राः ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ २ ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीदीपोत्सवीदेवतापूजनकर्मणः कल्याणं भवन्तो ब्रुवन्तु ॥ ॐ अस्तु कल्याणम् । एवं त्रिः ॥ यजुः ॥ ॐ यथेमाम्वाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्याᳬ शूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु ॥ २/२६ ॥ ऋक्सामाथर्वमन्त्राः ॥ सागरस्य यथावृद्धिर्महालक्ष्म्या-

दिभिः कृता ॥ सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ ३ ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीदीपोत्सवीदेवतापूजनकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु ॥ ॥ ॐ कर्म ऋद्ध्यताम् ॥ एवं त्रिः ॥ यजुः ॥ ॐसत्रस्यऽऋद्धिरस्यगंन्मज्ज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअद्ध्यारुहामाविंदामदेवान्स्वर्ज्ज्योतिः ॥ ५२/८ ॥ ऋक्सामाथर्वमन्त्राः ॥ स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं ताञ्च स्वस्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणायास्मै श्रीदीपोत्सवीदेवतापूजनकर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥ ॐ आयुष्मते स्वस्ति ॥ एवं त्रिः ॥ यजुः ॥ ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्र्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्द्दधातु ॥ १९/२५ ॥ ऋक्सामाथर्वमन्त्राः ॥ समुद्रमथनाज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीदीपोत्सवीदेवतापूजनकर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ ॐ अस्तु श्रीः ॥ एवं त्रिः ॥ ॥ यजुः ॥ ॐमनसः काममाकूतिंवाचः सत्त्यमशीय ॥ पशूनाᳩरूपमन्नस्यरसोयशः श्रीः श्रयतामयिस्वाहा ॥ ३९/४ ॥

ऋक्सामाथर्वमन्त्राः ॥ हस्ते जलमादाय । मया कृतेऽस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् महागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः इति द्विजाः ॥ अथाभिषेकः ॥ "अभिषेके पत्नी वामतः" इति यजमानस्य वामभागे यजमानपत्नीम् उपवेश्य अविधूराश्चत्वारो ब्राह्मणा दूर्वाग्रपल्लवैरुदङ्मुखास्तिष्ठन्तोऽभिषिञ्चेयुः ॥ तत्र मन्त्राः ॐपयः पृथिव्याम्पयऽओषधीषुपयो दिव्युन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ ३६/१८ ॥ ॐपञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ११/३४ ॥ ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्त्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६/४ ॥ ॐपुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ ३०/१९ ॥ ॐदेवस्यत्त्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ३०/९ ॥ ॐदेवस्यत्त्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३७/१८ ॥ ॐदेवस्यत्त्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषि

स्रामीन्द्रंस्येन्द्रियेणबलांयश्रियैयशंसेभिषिंञ्चामि ॥ ३/२० ॥ ॐविश्वांनिदेवसवितर्दुरितानिपरांसुव ॥ यद्भद्रन्तन्नऽआसुंव ॥ ३/३० ॥ ॐधामच्छदग्निरिन्द्रोंब्रह्मादेवोबृहस्प्पतिंः ॥ सचेतसोविश्वेंदेवायज्ञम्प्रावन्तुनःशुभे ॥ ७६/१८ ॥ ॐत्वंय्यंविष्ठदाशुषोनॄःपांहिशृणुधीगिरंः ॥ रक्षांतोकमुतत्त्मनां ॥ ५३/१३ ॥ ॐअन्नंपतेन्नंस्यनोदेह्यनमीवस्यंशुष्मिणंः ॥ प्रप्रंदारंन्तारिषऽऊर्ज्जंन्नोधेहिद्विपदेचतुंष्पदे ॥ ८३ ॥ ॐद्यौःशान्तिरन्तरिंक्षꣳशान्तिंःपृथिवीशान्तिरापःशान्तिरोषंधयःशान्तिंः ॥ वनस्प्पतंयःशान्तिर्विश्वेंदेवाःशान्तिर्ब्रह्मशान्तिःसर्वꣳशान्तिःशान्तिरेवशान्तिःसामाशान्तिंरेधि ॥ १७/३६ ॥ ॐयतोंयतःसमीहंसेततोंनोऽअभंयङ्कुरु ॥ शन्नंःकुरुप्प्रजाभ्योभंयन्नःपशुभ्भ्यंः ॥ २२/३६ ॥ अथ पुराणोक्ता अभिषेकमन्त्राः ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः । प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै नैर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्राह्मणाः सहिताः सर्वे दिक्पालाः पान्तु ते सदा । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः । एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमबुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ ऋषयो मुनयो गावो देव-

मातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एतास्त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो विदुः ॥ यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयो रक्ष्णोरापो निघ्नन्तु ते सदा । शान्तिः शान्तिः सुशान्तिर्भवतु ॥ स्वस्थाने उपविश्य । हस्ते जलं गृहीत्वा ॥ अभिषेककर्तृकेभ्यो ब्राह्मणेभ्यो यथोत्साहं दक्षिणां दास्ये तेन श्रीकर्माधीशः प्रीयताम् ॥ ततः सपत्नीकस्य यजमानस्य पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम् ॥ तस्य मन्त्रः ॥ ॐअनाधृष्टा पुरस्त्तादग्ग्नेराधिपत्त्यऽआयुर्म्मेदाः पुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्त्येप्प्रजाम्मेदाः सुखदाप्पश्चाद्देवस्यसवितुराधिपत्त्येचक्षुर्म्मेदाऽआ श्रुतिरुत्तरतोधातुराधिपत्त्येरायस्प्पोषम्मेदाः॥ विधृतिरुपरिष्ट्टाद्बृहस्प्पतेराधिपत्त्यऽओजोमेदाविश्वाब्भ्योमानाष्ट्राब्भ्यस्प्पाहिमनोरश्वासि ॥ १२/३७ ॥ अनेन पुण्याहवाचनेन श्रीदीपोत्सवीदेवता प्रीयताम् ॥

॥ इति पुण्याहवाचनप्रयोगः ॥

## ॥ एकतन्त्रेण श्रीमहाकाल्यादीनां पूजनप्रयोगः ॥

महाकालीध्यानम् ।—खड्गं चक्रगदेषु चापपरिघाञ्छूलं भूशण्डीं शिरः शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ महालक्ष्मीध्यानम् । अक्षस्रक्परशूगदेषु कुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिञ्च चर्मजलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ महासरस्वतीध्यानम् । घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिनयनामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥ चित्रलेखिनीध्यानम् ॥ वृद्धिं करोतु व्यापारे श्रियं कीर्तिं जयं सुखम् । कृपया तव देवेशि प्राप्यते सकलं नृणाम् ॥ ध्यायेऽहं लेखिनीं देवीं सर्वेषां जयदायिनीम् । प्राप्यते कृपया यस्या लाभालाभौ जयाजयौ ॥ ॐ अम्बेऽअम्बिके० ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३१/१ ॥ ॐ भूर्भुवः स्वः चित्र-

लेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः ध्यायामि ॥ आसनम् ॥ ॐ पुरुषऽएवेदꣳसर्वँय्यद्भूतँय्यच्च भाव्यम् । उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥ २/३१ ॥ पृथ्वीस्वरूपासनमेव यत्र त्वमेव लोकस्य चराचरस्य । तत्रासनं किं तव देवि ! देयं प्रदीयते पुष्पमिदं गृहाण ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः आसनार्थे पुष्पं सम० ॥ पाद्यम् ॥ ॐएतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३/३१ ॥ ददे कृतं तज्जगदम्ब देवि ! पाद्यं श्यामादियुक्तं चरणाब्जयोस्ते । पुनश्च माभूज्जठरे जनन्याः स्वप्नेऽपि वासो मम चात्रलोके ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः पादयोः पाद्यं सम० ॥ अर्घम् ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४/३१ ॥ दर्भाग्रदूर्वादियुतं गृहाण प्रदीयते ते करयोर्मयार्घम् ॥ समुद्धर त्वं कृपया गृहीत्वा करेण गृह्णासि यथा त्वमर्घम् । ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः हस्तयोरर्घं सम० ॥ आचमनीयम् ॥ ततो विराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५/३१ ॥ गृहाण कङ्कोललवङ्गयुक्तं पाणौ मया ते सलिलं प्रदत्तम् ।

करुष्व तेनाऽऽचमनं जलेन मातः शुभं वैदिकमन्त्रपाठैः ॥ ॐ भूर्भुवः स्वः चित्रलेखिनी-सहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः आचमनीयं समर्पयामि ॥

पञ्चामृतस्नानम् ॥ तत्रादौ पयःस्नानम् ॥ ॐपर्यः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षे-पयोधाः ॥ पयस्वतीःप्प्रदिशः सन्तुमह्यम् ॥ $\frac{३६}{१८}$ ॥ अतिमधुरमनोज्ञं श्वेतवर्णं ह्यवर्ण्यं प्रथितमपि सुहव्यं गव्यमेतद्धि देवैः । अहमिदममलं ते ह्यर्पयाम्यद्य दुग्धं भवतु तनुविशुद्धि-स्तेन दुग्धेन ते वै ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहा-सरस्वतीभ्यो नमः पयःस्नानं सम० ॥ पयःस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ दधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ $\frac{३९}{२३}$ ॥ करोतु कीर्तिं जगदम्ब ! शुद्धां लोके मदीयां विततामदीनाम् । श्वेतं पयस्यं मधुरं तदर्थं प्रदीयते त्वं कृपया गृहाण । ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः दधिस्नानं सम० । दधिस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

घृतस्नानम् ॥ ॐ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्ष्वधमावहमा-दयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ $\frac{८८}{१७}$ ॥ होमश्च येन क्रियते सुतृप्त्यै यज्ञेषु सर्वत्र सुरादि-

कानाम् । नवोद्धृतोद्भूतमिदं पयस्यं स्नानाय तेऽहं प्रददे भवानि ! ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः घृतस्नानं सम० । घृतस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ मधुस्नानम् ॥ ॐ मधुव्वाताऽऋतायतेमधुंक्क्षरन्तिसिन्धवंः ॥ माद्धवीर्नः सन्त्वोषधीः ॥ २७/१३ ॥ ॐ मधुनक्तमुतोषसोमधुमत्त्पार्त्थिवᳫं रजंः ॥ मधुद्यौरस्तुनः पिता ॥ २८/१३ ॥ ॐ मधुमान्नोव्वनस्प्पतिर्म्मधुमाँ२ऽअस्तुसूर्यंः ॥ माद्ध्वीर्ग्गावो भवन्तुनः ॥ २९/१३ ॥ पुष्पेभ्य आदाय रसं द्विरेफैर्मनोज्ञमेकीकृतमद्वितीयम् । प्रदीयते ते स्नपनाय मातर्गृहाण मातर्मधुरं मधु त्वम् ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः मधुस्नानं सम० । मधुस्नानान्ते शुद्धोदकस्नानं सम० ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ ॥ शर्करास्नानम् ॥ ॐअपाᳫं रसमुद्वयसᳫं सूर्य्येसन्तᳫं समाहितम् । अपाᳫं रसस्ययोरसस्तंव्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ ३/९ ॥ श्वेताश्च चन्द्रस्य समानवर्णा प्रदीयते ते मधुरां मनोज्ञाम् । गृहाण तां त्वञ्च शरीरशुद्ध्यै स्नानाय दत्तां रुचिरां सितां च ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः

श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः शर्करास्नानं सम० । शर्करास्नानान्ते शुद्धोदकस्नानं सम० ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ गन्धोदकस्नानम् ॥ ॐ गन्धर्वस्त्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ ३ ॥ काश्मीरदेशोद्भवचन्दनेन घृष्टश्च कर्पूरसमन्वितश्च । दत्तं सुगन्धि स्नपनाय गृह्ण गन्धोदकं केशरपत्रयुक्तम् । ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः गन्धोदकस्नानं सम० । गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ उद्वर्तनस्नानम् ॥ ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ ३ ॥ लोके प्रसिद्धं मनुजैरमर्त्यैः सदा गृहीतं मधुरं सुगन्धि । तैलोद्भवं तत्स्नपनाय चाहं ददे च ते ह्युत्तरमुत्तमञ्च ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः (हरिद्रादिसुगन्धि द्रव्यम्) उद्वर्तनस्नानं सम० । उद्वर्तनस्नानान्ते शुद्धोदकस्नानं सम० ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ देवीं गन्धाक्षतपुष्पैरभ्यर्च्य । उत्तरे निर्माल्यं विसृज्य । पुनः गन्धाक्षतपुष्पैरभ्यर्च्य वैदिकमन्त्रैः पौराणिकैश्चाभिषेकं कुर्यात् ॥ हरिः ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥

ताम्मऽआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविन्देयंगामश्वंपुरुषानहम् ॥ २ ॥
अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥ ३ ॥
कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् । पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रि-
यम् । चन्द्रांप्रभासांयशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदाराम् ॥ ४ ॥ तांपद्मनेमींशरणमहं-
प्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ ५ ॥ आदित्यवर्णेतपसोऽधिजातोवनस्पतिस्तववृक्षोथ-
बिल्वः ॥ तस्यफलानितपसानुदन्तुमायान्तरायाश्चबाह्याऽअलक्ष्मीः ॥ ६ ॥ उपैतुमांदेवसखः
कीर्तिश्चमणिनासह । प्रादुर्भूतोसुराष्ट्रेऽस्मिन्कीर्तिमृद्धिंददातुमे ॥ ७ ॥ क्षुत्पिपासामलांज्येष्ठा-
मलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिञ्चसर्वांनिर्णुदमेगृहात् ॥ ८ ॥ गन्धद्वारांदुराधर्षांनि-
त्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ ९ ॥ मनसःकाममाकूतिंवा-
चःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ १० ॥ कर्दमेनप्रजाभूतामयि-
संभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम् ॥ ११ ॥ आपःस्रजंतुस्निग्धानिचि-
क्लीतवसमेगृहे । निचदेवींमातरंश्रियंवासयमेकुले ॥ १२ ॥ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेम-
मालिनीम् । सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १३ ॥ आर्द्रांयःकरिणींयष्टिंपिंगलां-

पद्ममालिनीम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमऽआवह ॥ १४ ॥ तांमऽआवहजातवेदो-
लक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विन्देयंपुरुषानहम् ॥ १५ ॥ यः-
शुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥ सूक्तंपञ्चदशर्चंचश्रीकामः सततंजपेत् । पद्मानने-
पद्मऊरूपद्माक्षीपद्मसंभवे ॥ तन्मेभजसिपद्माक्षीयेनसौख्यंलभाम्यहम् । अश्वदायैगोदायैधन-
दायैमहाधने ॥ धनंमेजुषतांदेविसर्वकामांश्चदेहिमे ॥ पद्माननेपद्मविपद्मपत्रेपद्मप्रियेपद्म-
दलायताक्षी ॥ विश्वप्रियेविश्वमनोनुकूले त्वत्पादपद्मंमयिसंनिधत्स्व ॥ पुत्रपौत्रधनंधान्यं-
हस्त्यश्वादिगवेरथम् ॥ प्रजानांभवसिमाताआयुष्मन्तंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसूर्यो धनं-
वसुः ॥ धनमिन्द्रोबृहस्पतिर्वरुणंधनमस्तुमे ॥ वैनतेयसोमंपिवसोमं पिबतुवृत्रहा ॥ सोमंधनं-
स्यसोमिनो मह्यंददातुसोमिनः ॥ न क्रोधोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवन्तिकृत-
पुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरी प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमांदेवीं माधवीं
माधवप्रियाम् ॥ लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मी च विद्महे
विष्णुपत्नी च धीमहि ॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पव-

सानंमहीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंम्वत्सरंदीर्घमायुः ॥ इति श्रीसूक्तं समाप्तम् ॥ नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ९ ॥ रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ॥ ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ॥१०॥ कल्याण्यै प्रणतामृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः । नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ११ ॥ दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ॥ ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ १२ ॥ अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ॥ नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥१३॥ शान्तिः शान्तिः सुशान्तिर्भवतु । अभिषेकस्नानं सम० । ततः शुद्धोदकस्नानम् ॥ ॐ शुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्विनाःश्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअवलिप्तारौद्रा नभोरूपाःपार्जन्याः ॥ $\frac{3}{24}$ ॥ ॐ तस्माद्यज्ञात्सर्वहुतःसम्भृतं पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्याग्ग्राम्याश्चये ॥ $\frac{6}{31}$ ॥ तीर्थस्थलेभ्यश्च मया त्वदर्थं समाहृतं स्वच्छमनल्पमम्बु । गृहाण तत्त्वं सुखदं सुशीतं प्रदीयते ते स्नपनाय देवि ! ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ वस्त्रम् ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिज-

ज्ज्ञिरे। छन्दाᳫसिजज्ज्ञिरे तस्म्मादॄ्यजुस्त्तस्म्मादजायत ॥ ३१ ॥ ॐ सुजातोज्ज्योतिषा-सहशर्म्मवरूथमासदुत्स्वः। वासोऽअग्ग्ने विश्वरूपᳫसंव्ययस्वविभावसो ॥ ११ ॥ हिरण्यवर्णं ह्युपवस्त्रयुक्तं पीताम्बरं त्वं गिरिजे! गृहाण। याचे सदाहं भवबन्धमोक्षं गृहाण मां त्वं चरणाब्जयोस्ते। ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः वस्त्रोपवस्त्रे समर्पयामि। ( वस्त्राभावेऽक्षतान्समर्पयामि ) वस्त्रान्ते आचमनीयं समर्पयामि ॥ गन्धम् ॥ ॐ तँऽयज्ञम्बर्हिषिप्प्रौक्क्षन्न्पुरुषञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्त-साद्ध्याऽऋषयश्च्चये ॥ ३१ ॥ गन्धेन कुर्वे तव भालदेशे शुभां समर्चां विविधां विचित्रास्। तथैव ते कुङ्कुमरक्तवर्णामश्वत्थपत्राकृतिमादधामि ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः गन्धं समर्पयामि ॥ अक्षतान् ॥ ॐ अक्क्षन्नमीमदन्तह्यवप्प्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्प्रानविष्ठयामतीयोजान्निन्द्रतेहरी ॥ ३ ॥ शुभ्रैरखण्डैस्तव भालमध्येऽक्षतैः सुपूजां परितः करोमि। दूरीकुरु त्वं दुरितानि तानि दैवेन मे सँल्लिखितानि भाले ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः अक्षतान्समर्पयामि ॥ पुष्पाणि ॥ ॐ सत्त्पुरु-

षँव्यदंधुःकतिधाव्यकल्प्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ ३/१ ॥ श्वेतानि रक्तानि विचित्रवर्णान्यनेकदेशोद्भववृक्षजानि । पुष्पाणि मातस्तव मूर्ध्नि तानि गृहाण लब्धानि मयार्पितानि ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः पुष्पाणि समर्पयामि ॥ पुष्पमालाम् ॥ ॐद्याम्मालेखीरन्तरिक्षम्माहिंऽसीःपृथिव्यासम्भव । अयऽहित्वास्वधितिस्तेतिजानःप्प्रणिनायसहुतेसौभगाय ॥ अतस्त्वन्देवव्वनस्प्पतेशतवल्शो विरोहसहस्रवल्शाविवयऽरुहेम ॥ ५/२३ ॥ मालां सुपुष्पनिकरैर्विविधां विचित्रां मत्पाणियुग्मरचितां रुचिरां त्वदर्थम् ॥ हस्तद्वयेन तव चातिमनोहरेऽहं कण्ठे ददे सुषममौक्तिकरत्नयुक्ते ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः पुष्पमालां समर्पयामि ॥ अथ चित्रलेखिन्यादिदेवीनामक्षतैर्विशेषपूजां कुर्यात् । आदौ महाकाली ( खडिया ) पूजां कुर्यात् ॥ ॐ महाकाल्यै नमः । ॐ दशभुजायै नमः । ॐ दशवक्त्रायै नमः । ॐ मङ्गलायै नमः । ॐ अपराजितायै नमः । ॐ भीमरूपायै नमः । ॐ प्रीत्यै नमः । ॐ वरदायै नमः । ॐ शुभदायै नमः ॐ देव्यै नमः । ॐ तमोरूपिण्यै नमः । अथ चित्रलेखिनी ( कलम ) पूजां कुर्यात् ॥ ॐ चित्रलेखिन्यै नमः । ॐ विचित्रवर्णायै नमः । ॐ कृष्णास्यायै नमः । ॐ द्विजिह्वायै नमः ।

ॐ कात्यायन्यै नमः । ॐ कामपूरिण्यै नमः । ॐ सुखदुःखप्रदायिन्यै नमः । ॐ श्यामवर्णायै नमः । ॐ धनदायै नमः । ॐ धनधान्यसमृद्धिप्रदायै नमः । अथ महालक्ष्मीपूजां कुर्यात् ॥ ॐ दुर्गायै नमः । ॐ श्रीदेव्यै नमः । ॐ भगवत्यै नमः । ॐ कामायै नमः । ॐ वागेश्वर्यै नमः । ॐ वरदायै नमः । ॐ कृपार्थिन्यै नमः । ॐ पद्माकरवासिन्यै नमः । ॐ महिषमर्दिन्यै नमः । ॐ उमासुतायै नमः । ॐ इन्द्राण्यै नमः । ॐ गौर्यै नमः । ॐ मोहवत्यै नमः । ॐ शिवायै नमः । ॐ अन्नपूर्णायै नमः । ॐ शाकम्भर्यै नमः । ॐ महालक्ष्म्यै नमः । अथ महासरस्वती ( चोपडा ) पूजाम् । ॐ ब्रह्मपुत्र्यै नमः । ॐ सावित्र्यै नमः । ॐ प्रसन्नाननायै नमः । विधिमोहिन्यै नमः । श्रीमहासरस्वत्यै नमः ॥ सौभाग्यद्रव्याणि ॥ ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥ $\frac{५१}{२९}$ ॥ श्वेतञ्च रक्तञ्च सुवासितञ्च सिन्दूरमम्बीरमथो हरिद्राम् । सौभाग्यचूर्णं तव शीर्षदेशे गृहाण दत्तं परिवारयुक्ता । अबीलञ्च गुलालञ्च हरिद्रां कुङ्कुमं तथा । नानासुगन्धि द्रव्यञ्च गृहाण जगदीश्वरि ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ धूपम् ॥ ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अ-

जायत ॥ ३१/३१ ॥ पिशाचभूताद्यसुरोपशान्त्यै सुखाय लोकस्य चराचरस्य । निवेदितं धूपमिदं मया ते गृहाण तत्त्वं सघृतं दशाङ्गम् । वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकाली- महालक्ष्मीमहासरस्वतीभ्यो नमः धूपमाघ्रापयामि ॥ दीपम् ॥ ॐ चन्द्रमामनसोजातश्चक्षोः- सूर्य्योऽअजायत । श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत ॥ ३२/३१ ॥ समुज्वलं सन्निहितश्च पार्श्वे ह्याज्येन गव्येन कृतं सुदीपम् । निवेदयेऽहं तव वीक्षणाय मुखस्य स्वच्छां कमनीय- कान्तिम् ॥ ॐ भूर्भुवःस्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐ नाब्भ्याऽआसीदन्तरिक्षꣳ शीर्ष्णोद्यौःसमवर्त्तत । पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँऽअकल्प्पयन् ॥ १३/१३ ॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ देव्यग्रे नैवेद्यं निधाय तुलसीपत्रं नैवेद्योपरि दत्त्वा गायत्रीमन्त्रेण नैवेद्यं सम्प्रोक्ष्य । अस्त्रमुद्रया संरक्ष्य । धेनुमुद्रया अमृती- कृत्य । वामहस्तं पद्माकारं कृत्वा दक्षिणहस्तेन ग्रासमुद्राः प्रदर्शयेत् ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा ॥ मध्ये जवनिकां ( पडदो ) धृत्वा श्लोकान्पठेत् । ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैः समेता सख्या

सिञ्जद्वलयकरया सादरं वीज्यमाना । नर्मक्ष्वेलैः प्रहसनमुखी हासयन्ती स्वभोक्तॄन्भुङ्क्ते पात्रे कनकघटिते षड्रसान्विश्वमाता ॥ १ ॥ शालिभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं लेह्यं पेयञ्च चोष्यं सितममृतफलं घारिकाद्यं सखाद्यम् ॥ आज्यं प्राज्यं समज्यं नयनरुचिकरं राजिकैलामरिचस्वादीयःशाकराजीपरिकरममृताहारजोषं जुषस्व ॥ २ ॥ मातस्त्वां दधिदुग्ध-पायसमहाशाल्यन्नसन्तालिका सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः ॥ एलाजीरक-हिङ्गुनागरनिशाकौस्तुम्भरीसँस्कृतैः शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्पितैः ॥ ३ ॥ सापूपसूपदधिदुग्धसमन्वितानि स्वादूनि भक्ष्यपरमान्नपुरःसराणि । शाकोल्लसन्मरिचजीरक-बाह्लिकानि भक्ष्याणि भक्ष जगदम्ब ! मयार्पितानि ॥ ४ ॥ क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्य-मिदमुज्ज्वलं मधु । मातरेतदमृतोपमं त्वया सम्भ्रमेण परिपीयतां मुहुः ॥ ४ ॥ ॥ ५ ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः नैवेद्यं निवेद-यामि ॥ मध्ये पानीयं सम० । उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनम् आचमनीयञ्च सम० ॥ करोद्वर्तनार्थे गन्धं सम० ॥ ताम्बूलम् ॥ ॐ उतस्म्मास्य्द्द्रवतस्त्तुरण्ण्यतः पुर्ण्णन्नवर-नुवातिप्प्रगृर्द्धिनः । श्येनस्यैवद्ध्रजतोऽअङ्कसम्परिदधिक्क्राव्ण्णः सहोर्जातरित्त्रत्स्वाहा ॥ ६ ॥

दीपो. पृ. ५

एलालवङ्गादियुतं सुवर्णं सुवर्णपत्रेण विराजमानम् । प्रदीयते ते मुखवासनाय गृहाण ताम्बूलमिदं भवानि ! ॥ $\frac{१४}{३१}$ ॥ पूगीफलम् ॥ ॐ याः फलिनीर्या ऽ अफला ऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ᳪ हसः ॥ $\frac{८९}{१२}$ ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसञ्युक्तं ताम्बूलं प्रतिगृह्यताम् ॥ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः पूगीफलं सम॰ ॥ दक्षिणाम् ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक ऽ आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ $\frac{४}{१३}$ ॥ सर्वं त्वदीयं भुवि दृश्यमाणं तदा सुलभ्यं तव चेत् कृपा स्यात् । न मेऽस्ति किञ्चित्किमपीह लोके यदस्ति तत्ते प्रददे त्वदीयम् ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः यथामति (शक्ति) दक्षिणां सम॰ ॥ कर्पूरारार्तिक्यम् ॥ ह्रीं इति प्रज्वाल्य । नमः इति सम्पूज्य । उत्थाय । ॐ इद ᳪ हविः प्रजननम्मे ऽ अस्तु दशवीर ᳪ सर्वगण ᳪ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो-

रेतोऽअस्म्मासुंधत्त ॥४८/१९॥ ॐ अग्निर्द्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवता-
रुद्द्रादेवतादित्त्यादेवतामरुतोदेवताविश्वेदेवा देवताबृहस्प्पतिर्द्देवतेन्द्रोदेवता वरुणो देवता
॥ २०/१४ ॥ पुराणोक्तनीराजनम् ॥ प्रवरातीरनिवासिनि निगमप्रतिपाद्ये ( मा २ ) पारावार-
विहारिणि, नारायणि हृदये। जय देवि जय देवि ॥ जय मोहिनीरूपे (मा) जयमोहिनीरूपे,
मामिह जननि समुद्धर, पतितं भवकूपे। जय देवि, जय देवि ॥ प्रपञ्चसारे जगदाधारे श्रीविद्ये
(मा) जगदाधारे श्रीविद्ये, प्रपन्नपालननिरते, (२) मुनिवृन्दाराध्ये। जय देवि जय देवि ॥
दिव्यसुधाकरवदने कुन्दोज्वलरदने (मा. २) पदनखनिर्जितमदने, (२) मधुकैटभकदने।
जय देवि जय देवि ॥ विकसितपङ्कजनयने, पन्नगपतिशयने (मा. २) खगपतिवहने गहने
(२) सङ्कटवनदहने। जयदेवि जयदेवि ॥ मञ्जीराङ्कितचरणे मणिमुक्ताभरणे (मा. २) कञ्चु-
किवस्त्रावरणे (२) वक्त्राम्बुजधरणे। जय देवि, जय देवि ॥ शक्रामयभयहरणे, भुसुरसुख-
करणे (मा. २) करुणां कुरु मे शरणे (२) गजनक्रोद्धरणे। जय देवि जय देवि ॥ छित्त्वा
राहुग्रीवां, पासि त्वं विबुधान् (मा. २) ददासि मृत्युमनिष्टं (२) पीयूषं विबुधान्। जय
देवि जय देवि ॥ विहरसि दानव ऋद्धान्, समरे संसिद्धान् (मा.२) मध्वमुनीश्वरवरदे (२)

पालय संसिद्धान् । जय देवि जय देवि ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ कर्पूरपूरेण मनोहरेण सुवर्णपात्रान्तर-संस्थितेन । प्रदीसभासा सहसङ्गतेन नीराजनं ते जगदम्ब कुर्वे ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ॐ भूर्भुवः स्वः चित्रलेखिनी-सहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः नीराजनं (आरार्तिक्यं) सम० ॥ जलेन प्रदक्षिणां विधाय । (आचाराद्देवीवन्दनम्) । हस्तेनात्मवन्दनम् । हस्तं प्रक्षाल्य । मन्त्रपुष्पाञ्जलिम् । ॐयज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् । तेहनाकम्महि-मानः सचन्तयत्रपूर्वेसाध्याः सन्ति देवाः ॥ १६/३१ ॥ ॐ राजाधिराजायप्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वै श्रवणाय महाराजाय नमः । ॐ स्वस्ति । साम्राज्यं भौज्यं स्वराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महा-राज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुषऽआन्तादापरार्धात् । पृथिव्यै समुद्र-पर्यन्ताया एकराडिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आवि-क्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुत-

विश्वतस्पात् । सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमिञ्जनयन्देवऽएकः ॥ १६/१७ ॥ पुरोक्त-मन्त्रपुष्पाञ्जलिमन्त्राः ॥ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवाल-खेटविलसद्धस्ताभिरासेविताम् । हस्तैश्चक्रगदासिखेटविशिखां चापं गुणं तर्जनीं बिभ्राणा-मनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ जानामि पूजनमहं नहि शास्त्रसिद्धं शक्तिस्तु ते परिचिता मम सर्वतश्च । पुष्पाञ्जलिर्जननि यश्चरणाब्जयोस्ते सन्दीयते परिगृहाण विसृज्य दोषान् ॥ ॐ भूर्भुवः स्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः मन्त्रपुष्पाञ्जलिं सम० ॥ प्रदक्षिणाम् । ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ ३५/३१ ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः । त्राहि मां पुण्डरिकाक्ष सर्वपापहरो हरिः ॥ कृतानि यानि पापानि पूर्वे वा चेह जन्मनि । तानि नश्यन्तु सर्वाणि कुर्वेऽहं ते प्रदक्षिणाम् ॥ ॐ भूर्भुवः स्वः चित्रलेखि-नीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः प्रदक्षिणां सम० । विशेषार्घः ॥ एकस्मिन्पात्रे जलं गृहीत्वा तस्मिन्गन्धाक्षतपुष्पाणि हिरण्यञ्च निधाय तदुपरि नालिकेरं

धृत्वा ॥ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ रूपं देहि जयं देहि भाग्यं देहि सुखं यशः । पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ ॐ भूर्भुवःस्वः चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्योः नमः विशेषार्घं सम० ॥ ततः प्रार्थयेत् ॥ नासीत्पुरा मम तु काकणिकापि चैका तत्र त्वया त्वपरिगण्यधनं प्रदत्तम् । ख्यातं तवैव दयया मम नाम मह्यामेताः कथं ह्युपकृतीस्तव विस्मरेयम् ॥ १ ॥ प्राप्तं तवैव कृपया खलु निर्गुणेन ह्यग्रेसरत्वमवनौ विबुधेषु सत्सु । पृच्छन्ति मां जनहिताय जनाः स्वकार्यै चैताः कथं ह्युपकृतीस्तव विस्मरेयम् ॥ २ ॥ नासीद्गृहं भुवि कलत्रसुतादियुक्तं तत्राद्य पुत्रपरिवारसमन्वितं मे ॥ जातं तवैव दययेति विमन्य एतच्चैताः कथं ह्युपकृतीस्तव विस्मरेयम् ॥३॥ दृष्टिः समास्ति गुणनिर्गुणवत्सुतेषु स्वान्तं तु ते जननि ! निर्गुणपक्षपाति ॥ प्रायस्त एव धनधान्ययुताः पृथिव्यामेताः कथं ह्युपकृतीस्तव विस्मरेयम् ॥ ४ ॥ नमामि मातस्तव पादपद्मं स्मरामि मातस्तव पादपद्मम् । जपामि मातस्तव बीजमन्त्रं सन्तुष्टचित्ता मम तेन भूयाः । आवाहनं न जानामि न जानामि तवार्चनम् । पूजाञ्चैव न जानामि क्षमस्व परमेश्वरि ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वरि । यत्पू-

जितं मया देवि ! परिपूर्णं तदस्तु मे ॥ यस्याः स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु ॥ न्यूनं सम्पूर्णतां याति वन्दे तां जगदम्बिकाम् ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ त्वन्नाम स्मरणादेव सम्पूर्णं स्यादिति श्रुतिः ॥ एवं स्तुतिपाठं विधाय। हस्ते जलं गृहीत्वा। अनेन यथाज्ञानेन यथामिलितोपचारद्रव्यैः पूजनकर्मणा कृतेन ॐ चित्रलेखिनीसहिताभ्यः श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यः प्रीयन्तां न मम ॥ पुनर्जलं गृहीत्वा ॥ कृतस्यास्य श्रीदीपोत्सवीनिमित्तं श्रीलक्ष्मीपूजनकर्मणः साङ्गतासिद्ध्यर्थम् आचार्यस्य पूजनपूर्वकम् आचार्याय दक्षिणाप्रदानं करिष्ये। आचार्यपूजनम्। ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ तत आचार्यो यजमानभाले तिलकं कृत्वा आशीर्वादं दद्यात् ॥ ॐ स्वस्तिन० ॥ स्वस्तिस्तु या० ॥ आशीर्वादमन्त्राः ॥ ॐपुनस्त्वादित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोवसुनीथ-यज्ञैः ॥ घृतेनत्त्वन्तन्वंवर्द्धयस्वसत्त्याःसन्तुयजमानस्यकामाः ॥ १२/४४ ॥ पुराणोक्तमन्त्रः। स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिरस्तु धनधान्यसमृद्धिरस्तु। ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु

मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ सर्वे जनाः सुखिनो भवन्तु । मनःकामनाः परिपूर्णा भवन्तु । बह्वायुष्यप्राप्तिरस्तु । धनकनकसमृद्धिरस्तु ॥ पञ्चामृतं प्रसादश्च गृह्णीयात् ॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम् । देवीपादोदकं पीत्वा जठरे धारयाम्यहम् ॥ अत्रावसरे यजमान एकं श्रीसरस्वती (चोपडो) पुस्तकं हस्ताभ्यां गृहीत्वा स्वशिरसि धृत्वा "अस्माकं व्यापारे सपादलक्षो लाभो भवतु" इति वदन् स्वस्थाने स्थापयेत् । एवं त्रिवारं कुर्यात् । (अयमाचारो ज्ञेयः) ॐ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥

अयं "वैदिकः पौराणिकश्च श्रीलक्ष्मीपूजनप्रयोगः" साम्प्रतं मुम्बापुरीवास्तव्येन जामनगर-निवासिनाऽऽचार्योवटङ्केन अमृतलाल त्रिकमजी शास्त्रिणा सङ्गृहीतः

॥ इति श्रीलक्ष्मी (श्रीदीपोत्सवी) पूजनप्रयोगः समाप्तः ॥

अयं "वैदिकः पौराणिकश्च श्रीलक्ष्मीपूजनप्रयोगः" निर्णयसागरकृते मोहमयी (मुम्बापुरी) वास्तव्येन जामनगरनिवासिनाऽऽचार्यविटङ्केन अमृतलाल त्रिकमजी शास्त्रिणा सङ्गृहीतः संशोधितश्च स च "सत्यभामाबाई पाण्डुरङ्ग" इत्येताभिः निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः

★

शाकः १८७२ सन १९५०

★

पब्लिशर—सत्यभामाबाई पांडुरंग.<br>
प्रिंटर—रामचंद्र येसु शेडगे.

निर्णयसागर प्रेस, २६—२८ कोलभाट स्ट्रीट, मुंबई नं. २

